

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलुरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## SHIKSHA -7

Bk. Deminn 2000

ॐ

॥ जयतु भारतम् - जयतु भारती ॥

# संस्कृत भारती

## पत्रालयद्वारा संस्कृतम्

***Samskrit Through Correspondence***

"Aksharam" 8th Cross, II Phase, Girinagar,
Bangalore-560 085. Ph.: 6721052

Serial No. 

## शिक्षा

॥ वज्रादपि हि धीराणां चित्तरत्नमखण्डितम् ॥

The mind of bravemen is like a precious stone which even a diamond cannot cut.

## सप्तमः पाठः

### १. कृदन्ताः (Participles)

तव्य is one of the Krit affixes added to roots. A form ending in तव्य conveys potential mood. अनीयर् प्रत्यय also conveys the same sense.

For example -

मया पठितुं गन्तव्यम् । I must go to read.

(Note- The samskrit sentence is in passive voice)

युतकं धर्तुं वस्त्रं क्रयणीयम् । I must buy the cloth to wear a shirt.

Read and understand the following sentences-

१. विशेषज्ञानं प्राप्तुं देशे पर्यटितव्यम्[1] ।

२. नर्तितुं नटेन पूर्वं सम्यक् अभ्यसितव्यम्[2] ।

1. must tour, 2. must rehearse

३. अन्यैः सह स्पर्धितुं बहु यतितव्यम्[3] ।

४. बीजं वप्तुं[4] कृषीबलेन क्षेत्रं क्रष्टव्यम्[5] ।

५. पठितुं लेखकैः पुस्तकानि लेखितव्यानि ।

६. छात्रैः उत्तरितुं सर्वे विषयाः स्मर्तव्याः ।

७. उत्तमं शीलं शिक्षितुं कदाचित् बालाः ताडयितव्याः ।

८. इतिहासं बोधयितुम् ऐतिहासिककथाः कथयितव्याः ।

९. इष्टसिद्धिं प्राप्तुं देवाः पूजयितव्याः ।

१०. अपराधस्य निमित्तम् अपराधिनः दण्डनीयाः ।

११. मनः शोद्धुं[6] धार्मिकः विषयः चिन्तनीयः ।

१२. स्वार्थं लब्धुम् अन्यः न पीडनीयः ।

१३. दुःखम् अपाकर्तुं दुःखिनः सान्त्वनीयाः[7] ।

१४. अनेकविषयान् अवगन्तुं बहवो ग्रन्थाः परिशीलनीयाः ।

१५. सर्वेषाम् उत्साहं वर्धयितुं कार्यक्षेत्रे त्वरणीयम् ।

१६. परोपकारं कर्तुं दुःखसागरे तरणीयम्[8] ।

१७. सर्वान् सन्तोषयितुं प्रियवचनं वदनीयम्[9] ।

१८. पुण्यानि आर्जयितुं[10] तीर्थक्षेत्रे भ्रमणीयम् ।

**Rules of तव्यत् and अनीयर् suffixes.**

These both suffixes give the same meaning. Therefore any one of these two may be used. Though all verbroots get both suffixes, some are familiar with तव्यत् suffixes and some with अनीयर् suffixes (using unfamiliar form is not wrong)

Both suffixes are used in कर्मणिप्रयोग and भावेप्रयोग, not in कर्तरिप्रयोग.

---

3. must try, 4. to sow the seed, 5. must plough, 6. to purify, 7. must be consoled, 8. must swim accross, 9. must speak, 10. to earn.





उदा - मया विद्यालयः गन्तव्यः or गमनीयः ।
त्वया शाला गन्तव्या or गमनीया ।
तेन गृहं गन्तव्यम् or गमनीयम् ।

In English, sentences like 'I should go to school' 'I should do this work' are in active voice. But in Samskrit these sentences are used mostly in passive voice.

उदा - मया शाला गन्तव्या । (school should be reached by me)

मया इदं कर्तव्यम् । (This should be done by me)

Since these two suffixes are used only in कर्मणि and भावे प्रयोग, we should follow the rules of these प्रयोग (voices) in using the suffixes. (Rules of कर्मणि and भावे प्रयोग are already explained in pravesha). Mainly these two points should be remembered.

1. Subject is used in 3rd case only.
2. words ending with these suffixes follow the object in gender, case and number.

## २. पदसङ्ग्रहः

बन्ध् - to tie

१. बध्नाति, २. बध्यते, ३. भन्त्स्यति.

४. बन्द्धव्यम्-बन्धनीयम्, ५. बद्धः-बद्धा-बद्धम्,, ६. बद्धवान्बद्धवती,

७. बध्नन्-बध्नती, ८. बद्ध्वा-उद्बध्य, ९. बन्धुम् ।

ब्रूञ् - to speak

१. ब्रवीति, २. उच्यते, ३. वक्ष्यति,

४. वक्तव्यम्-वदनीयम्, ५. उक्तः-उक्ता-उक्तम्, ६. उक्तवान्उक्तवती,

७. ब्रुवन्-ब्रुवती, ८. उक्त्वा-प्रोच्य, ९. वक्तुम् ।

भू - to be

१. भवति, २. भूयते, ३. भविष्यति,

४. भवितव्यम्-भवनीयम्, ५. भूतः-भूता-भूतम्, ६. भूतवान्भूतवती,

७. भवन्-भवन्ती, ८. भूत्वा-अनुभूय, ९. भवितुम् ।

भ्रमु - to roam about

१. भ्राम्यति, २. भ्रम्यते, ३. भ्रमिष्यति,

४. भ्रमितव्यम्-भ्रमणीयम्, ५. भ्रान्तः-भ्रान्ता-भ्रान्तम्,

६. भ्रान्तवान्-भ्रान्तवती, ७. भ्रमन्-भ्रमन्ती, ८. भ्रमित्वा-भ्रान्त्वा-परिभ्रम्य, ९. भ्रमितुम् ।

भ्रस्ज् - to fry

१. भृज्जति, २. भृज्ज्यते, ३. भ्रक्ष्यति,

४. भ्रष्टव्यम्-भर्ष्टव्यम्-भर्जनीयम्-भ्रज्जनीयम्, ५. भृष्टः-भृष्टा-भृष्टम्,

६. भृष्टवान्-भृष्टवती, ७. भृजन्-भृजन्ती-भृज्जती, ८. भृष्ट्वा विभृज्ज्य, ९. भ्रष्टुम्-भर्ष्टुम् ।

## ३. प्रहेलिका - १०

वृक्षाग्रवासी न च पक्षिजातिः
तृणं च शय्या न च राजयोगी ।
आपीतवर्णो न च हेमधातुः
अतश्च ताम्रः सुरसः क एषः ?





It resides on tree, yet it is not a bird, it sleeps on grass it is not Yogin. It is yellow yet not gold. Therefore it is delicious copper ! what is it ?

(Answer - आम्रः = Mango fruit, Here the word अतः has two meaning 1. Therefore, 2. without the letter त, the word ताम्रः minus त is आम्रः)

## ४. सुभाषितम् - ११

सत्यं तपो[1] ज्ञानमहिंसतां च
विद्वत्प्रणामं च सुशीलतां च ।
एतानि यो[2] धारयते स[3] विद्वान्
न तत्र शास्त्राध्ययनं[4] हि कारणम् ॥

**पदविभागः**

सत्यम्, तपः, ज्ञानम्, अहिंसताम्, च, विद्वत्प्रणामम्, च, सुशीलताम्, च, एतानि, यः, धारयते, सः, विद्वान्, न, तत्र, शास्त्राध्ययनम्, हि, कारणम् ॥

**तात्पर्यम्**

A truly learned man is one who is truthful, does penance, has wisdom, practises non-violence, has respect for scholars and has good conduct. Study of the various branches of science alone does not make a man learned.

**अन्वयः**

यः सत्यम् तपः ज्ञानं अहिंसतां विद्वत्प्रणामं सुशीलतां च धारयते सः विद्वान् । तत्र शास्त्राध्ययनं न कारणम् ।

---

१. विसर्गसंधिः (उकारः), २. विसर्गसन्धिः (उकारः), ३. विसर्गसन्धिः (लोपः), ४. सवर्णदीर्घसन्धिः (शास्त्र+अध्ययनम्)

अन्वयार्थः

सः विद्वान् - He is a learned man, यः - who, धारयते - possesses, सत्यम् - truthfulness, तपः - penance, ज्ञानम् - wisdom. अहिंसताम् - non-violence, विद्वत्प्रणामम् - regard for scholars, सुशीलतां च - and good conduct, तत्र - in the matter, शास्त्राध्ययनम् - Study of the Shastras, न कारणम् - is not the cause.

## सुभाषितम् - १२

करे श्लाघ्यस्त्यागः[1] शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम्[2] ।
हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयोः
[3]विनाप्यैश्वर्येण[4] प्रकृतिमहतां मण्डनमिदम् ॥

पदविभागः

करे, श्लाघ्यः, त्यागः, शिरसि, गुरुपादप्रणयिता, मुखे, सत्या, वाणी, विजयि, भुजयोः, वीर्यम्, अतुलम्, हृदि, स्वच्छा, वृत्तिः, श्रुतम्, अधिगतम्, च, श्रवणयोः, विना, अपि, ऐश्वर्येण, प्रकृतिमहताम्, मण्डनम्, इदम् ।

तात्पर्यम्

Giving charity adorns the hand; bowing down before elders adorns the head; truthful words adorn the mouth; the strength that brings victory adorns the arms, a clear conscience adorns the heart, well assimilated knowledge adorns the ears, even without material wealth, these adorn greatmen.

१. विसर्गसन्धिः (सकारः), २. विसर्गसन्धिः (रकारः), ३. सवर्णदीर्घसन्धिः, ४. यण्सन्धिः





अन्वयार्थः

श्लाघ्यः त्यागः - worthy charity करे - is for the hand गुरुपादप्रणयिता - bowing down to elders शिरसि - is for the head; अतुलं विजयि वीर्यं - enormous strength that brings victory भुजयोः - is for the arms; स्वच्छा वृत्तिः - clean conduct हृदि - is for the heart अधिगत् श्रुतम् - well assimilated knowledge श्रवणयोः - is for the ears; विना अपि - even without, ऐश्वर्येण - the material wealth इदं - all this मण्डनं - is decoration प्रकृतिमहतां - for the greatmen.

## ५. काव्यकथा

### भीष्मयुधिष्ठिरयोः संवादः[a] । अर्जुनस्य इन्द्रकीलप्रयाणम् ।

द्रौपद्या[1] वचनानन्तरं भीमसेनो[2] वक्तुमारम्भं कृतवान् । स[3] तस्या[4] वचनं श्रेष्ठमिति चिन्तितवान् । भीमः कथयति- ‘‘अग्रज ! द्रौपद्या[5] वचनं रमणीयम् । बृहस्पतिरप्येवं[6] वक्तुं न शक्तः । तस्या[7] वचनम् अर्थगर्भितम् । अतस्तस्या[8] वचनं स्वीकुरु । तव बुद्धिर्विद्यासु[9] परिणता[b] । कथं कौरवाणां विषये सा नष्टा ? देवा[10] अपि पूर्वमस्माकं पौरुषमभिनन्दन्ति स्म । इदानीं

१. द्रौपद्याः + वचनानन्तरम् = वि. सन्धिः (लोपः)
२. भीमसेनः + वक्तुम् = वि. सन्धिः (उ) + गुणसन्धिः
३. सः + तस्याः = वि. सन्धिः (लोपः)
४. तस्याः + वचनम् = वि. सन्धिः (लोपः)
५. द्रौपद्याः + वचनम् = वि. सन्धिः (लोपः)
६. बृहस्पतिः + अपि + एवम् = वि. सन्धिः (र) + यण्सन्धिः
७. तस्याः + वचनम् = वि. सन्धिः (लोपः)
८. अतः + तस्याः + वचनम् = वि. सन्धिः (सकारः) + वि. सन्धिः (लोपः)
९. बुद्धिः + विद्यासु = वि. सन्धिः (रकारः)
१०. देवाः + अपि = वि. सन्धिः (लोपः)

a. conversation, b. trained

तेऽपहास्यं[11] कुर्वन्ति । पौरुषं प्रधानम् । न दैन्यम् । त्वं द्वादशवर्षाणामवधिनिरीक्षणं[c] करोषि । तद्व्यर्थम्[12] । सम्पदोऽनुभूय[13] को[14] वा प्रत्यर्पयति[d] ? अथवा यदि स्वीकुर्मः, तत् अपमानमस्माकम् । अतः शान्तिमार्गं परित्यज्य वीरमार्गम् आश्रय । युद्धं कुर्मः । शत्रूणां नाशो[15] भवतु'' इति ।

भीमस्य वचनं श्रुत्वा युधिष्ठिरः उपदेशमारब्धवान्- ''तव वचनम् अर्थपूर्णम् । तथापि अहं किञ्चिच्चिन्तयामि[16] । सर्वं कार्यं त्वरया[e] न कर्तव्यम् । विमर्श [17]आवश्यकः । इन्द्रियाणां निग्रहोऽवश्यं[18] कर्तव्यः । शान्तिः प्रधानं साधनम् । दुष्टास्तत्काले[19] सुखमनुभवन्ति । अन्ते विनश्यन्ति'' इति ।

तस्मिन्नेव[20] समये तत्र आश्रमे व्यासमुनिरागतवान्[21] । युधिष्ठिरोऽतीव[22] सन्तुष्टः । पूजासत्कारं कृतवान् । अनन्तरं धर्मराजो[23] वक्तुमारब्धवान्- ''मुनिश्रेष्ठ ! तव आगमनेन अस्माकं जन्म सफलम् । त्वं निःस्पृहः[f] ।

---

११. ते + अपहास्यम् = पूर्वरूपसन्धिः
१२. तत् + व्यर्थम् = जश्त्वसन्धिः
१३. सम्पदः + अनुभूय = वि. सन्धिः (उ) + गुणः + पूर्वरूपसन्धिः
१४. कः + वा = वि. सन्धिः (उ) + गुणः
१५. नाशः + भवतु = वि. सन्धिः (उ) + गुणः
१६. किञ्चित् + चिन्तयामि = श्चुत्वसन्धिः
१७. विमर्शः + आवश्यकः = विसर्गसन्धिः (लोपः)
१८. निग्रहः + अवश्यम् = विसर्गसन्धिः (उ) + गुणः + पूर्वरूपसन्धिः
१९. दुष्टाः + तत्काले = वि. सन्धिः (सकारः)
२०. तस्मिन् + एव = (ङमुडागमसन्धिः)
२१. व्यासमुनिः + आगतवान् = विगर्ससन्धिः (रकारः)
२२. युधिष्ठिरः + अतीव = विसर्गसन्धिः (उ) + गुणः + पूर्वरूपसन्धिः
२३. धर्मराजः + वक्तुम् = विसर्गसन्धिः (उ) + गुणः

---

c. awaiting the deadline, d. return, e. hastily, f. one who has conquered desire,





अस्माकं समीपे किं वा पृच्छसि ? अतस्तवागमनप्रयोजनं[24] न पृष्टवान् अहम् । तथापि[25] तव वचनं श्रोतुमिच्छमि'' इति । युधिष्ठिरस्य वचनं श्रुत्वा व्यासमहर्षिरुक्तवान्[26]- ''राजश्रेष्ठ ! त्वं सर्वेषु बन्धुषु समानां प्रीतिं निक्षिप्तवान् । तव स्वभावोऽभिनन्दनीयः[27] । मुनिष्वपि[28] तवायं[29] स्वभावः स्तुतियोग्यः । तव गुणैरहं[30] सन्तुष्टः । वयं मोक्षं प्राप्तुं प्रयत्नं कुर्मः । कस्मिन्नपि[31] विशेषप्रीतिरस्माकं[32] नास्ति[33] । तथापि[34] साधुजनेषु [35]विशेषप्रीतिर्भवत्येव[36] । अतः उपदेशवचनानि कथयामि । दुर्योधनः शस्त्रास्त्रसङ्ग्रहं कृतवान् । [37]भवत्स्वपि[g] शूरः अर्जुनः शस्त्रसङ्ग्रहं करोतु । अतः पशुपतिम् उद्दिश्य तपः कृत्वा 'पाशुपतास्त्रं' सम्पादयतु । अहम् एकं मन्त्रम् उपदिशामि । तेन मन्त्रेण तपः आचरितुं शक्यते । प्रथमं तपसा इन्द्रः आराधनीयः । इन्द्रस्यानुग्रहेण[38] पराक्रमः भवति । अहम् एकं यक्षं प्रेषयामि । सः अर्जुनं तपोवनं नयति ।'' एवमुक्त्वा व्यासः अदृश्यो[39] जातः ।

---

२४. अतः + तवागमनप्रयोजनम् = विसर्गसन्धिः (स)
२५. तथा + अपि = सवर्णदीर्घसन्धिः
२६. महर्षिः + उक्तवान् = विसर्गसन्धिः (रकारः)
२७. स्वभावः + अभिनन्दनीयः = विसर्गसन्धिः (उ) + गुणः + पूर्वरूपसन्धिः
२८. मुनिषु + अपि = यण्सन्धिः
२९. तव + अयम् = सवर्णदीर्घसन्धिः
३०. गुणैः + अहम् = विसर्गसन्धिः (रकारः)
३१. कस्मिन् + अपि = (ङमुडागमसन्धिः)
३२. विशेषप्रीतिः + अस्माकम् = विसर्गसन्धिः (रकारः)
३३. न + अस्ति = सवर्णदीर्घसन्धिः
३४. तथा + अपि = सवर्णदीर्घसन्धिः
३५. विशेषप्रीतिः + भवति = विसर्गसन्धिः (रकारः)
३६. भवति + एव = यण्सन्धिः
३७. भवत्सु + अपि = यण्सन्धिः
३८. इन्द्रस्य + अनुग्रहेण = सवर्णदीर्घसन्धिः
३९. अदृश्यः + जातः = विसर्गसन्धिः (उकारः)

---

g. among you also

यक्ष[40] आगतः । अर्जुनः गमनार्थं सिद्धः । तदा द्रौपदी कथयति- "फलपर्यन्तं तपस्यामाचर । शत्रूणां जयार्थं सामर्थ्यं सम्पादनीयम् । व्यासवचनमनुसर । अस्माकं मनोरथः सफलो[41] भवतु" इति ।

अर्जुनो[42] दुर्योधनादीन् शत्रून् स्मृतवान् । स[43] कवचं धृतवान् । यक्षेण सह गतवान् । आकाशे पुष्पवृष्टिरभवत्[44] ।

### ६. अन्वयरचनाक्रमः

**१९) मितं भुङ्क्ते संविभज्याश्रितेभ्यः[1]**
**मितं स्वपित्यमितं[2] कर्म कृत्वा ।**
**[3]ददात्यमित्रेष्वपि[4] याचितः सन्**
**तमात्मवन्तं प्रजहत्यनर्थाः[5] ॥**

**पदविभागः**

मितम्, भुङ्क्ते, संविभज्य, आश्रितेभ्यः, मितम्, स्वपिति, अमितम्, कर्म, कृत्वा, ददाति, अमित्रेषु, अपि, याचितः, सन्, तम्, आत्मवन्तम्, प्रजहति, अनर्थाः ।

---

४०. यक्षः + आगतः = विसर्गसन्धिः (लोपः)
४१. सफलः + भवतु = विसर्गसन्धिः (उकारः)
४२. अर्जुनः + दुर्योधनादीन् = विसर्गसन्धिः (उकारः)
४३. सः + कवचम् = विसर्गसन्धिः (लोपः)
४४. पुष्पवृष्टिः + अभवत् = विसर्गसन्धिः (रकारः)

---

१. संविभज्य + आश्रितेभ्यः = सवर्णदीर्घसन्धिः
२. स्वपिति + अमितम् = यण्सन्धिः
३. ददाति + अमित्रेषु = यण्सन्धिः
४. अमित्रेषु + अपि = यण्सन्धिः
५. प्रजहति + अनर्थाः = यण्सन्धिः





**तात्पर्यम्**

Calamities never befall a strongwilled person who shares his food with others and eats, works more and sleeps less and gives charity even to an enemy who comes asking.

**अन्वयरचना**

१. भुङ्क्ते - eats

कथं भुङ्क्ते ? - मितम् ।
किं कृत्वा भुङ्क्ते ? - संविभज्य ।
केभ्यः संविभज्य ? - आश्रितेभ्यः ।

२. स्वपिति - sleeps

कथं स्वपिति ? - मितम् ।
किं कृत्वा स्वपिति ? - कर्म कृत्वा ।
कीदृशं कर्म ? - अमितम् ।

३. ददाति - Gives

कः ददाति ? - याचितः सन्
केषु ददाति ? - अमित्रेषु अपि ।

४. प्रजहति - leave, abandon

के प्रजहति ? - अनर्थाः ।
कं प्रजहति ? - तम् ।
कीदृशं तम् ? - आत्मवन्तम् ।

Write the prose order of the above four parts and the word-to-word meaning of the verse.

१६. प्रदायैषामुचितं तातराज्यं
सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मनुष्याणां
भविष्यसि त्वं गर्हणीयो नरेन्द्र ! ॥

**पदविभागः**

प्रदाय, एषाम्, उचितम् ... ... ... नरेन्द्र !

**तात्पर्यम्**

Oh king ! if you give away half the kingdom being their rightfull share in their father's kingdom you can live happily with your children. Neither the Gods nor men will accuse you them.

**अन्वयरचना**

न भविष्यसि - will not be नरेन्द्र ! - Oh King !
कः न भविष्यसि ? - गर्हणीयः (कर्तृ)
केषां गर्हणीयः ? - देवानाम्
पुनः केषाम् ? - मनुष्याणाम्
कः सन् न भविष्यसि ? - मोदमानः (सन्)
पुनः कः सन् ? - सुखी
पुनः कः सन् ? - सहितः
कैः सहितः ? - पुत्रैः
किं कृत्वा न भविष्यसि ? - प्रदाय
किं प्रदाय ? - तातराज्यम्
कीदृशं तातराज्यम् ? - उचितम्
केषां प्रदाय ? - एषाम्





## ७. सन्धयः

### ३. विसर्गसन्धिः (रकारनियमः)

(where विसर्ग is replaced by the letter 'र')

A visarga preceded by any vowel except अ or आ and followed by a vowel or a soft consonant, is replaced by रेफः. (the letter र)

eg. - नृपतिः + अयम्
नृपति + ः + अयम्
नृपति + र् + अयम् = नृपतिरयम्
भानुः + विराजते = भानुर्विराजते
मुनिः + जपति = मुनिर्जपति
धेनुः + धावति = धेनुर्धावति

## ८. सङ्ग्राह्यविषयाः

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरञ्जीविनः ॥

Aswatthaman, Bali, Vyasa, Hanuman, Vibhishana, Krupa, Parashuram, these seven are chiranjeevis.

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥

Ayodhya, Mathura, Haridwar (माया), Kashi, Kanchi, Ujjain (अवन्तिका), Puri, Dwaraka (द्वारावती) - these seven cities are called मोक्षदायिकाः (places where emancipation is achieved easily)

ॐ

# संस्कृत भारती

## पत्रालयद्वारा संस्कृतम्

## Samskrit Through Correspondence

Serial No. 

## शिक्षा - ७

### सप्तमः पाठः

### प्रश्नाः

I. Translate the following sentences into Samskrit-

1. There are rivers in our country.
2. The Ganga is the holiest of them.
3. On the bank of Ganga Kashi is situated.
4. There is a temple of Vishwanatha at Kashi.
5. I must go there.
6. Will you also come ?
7. No, I will come some other time.

II. Recognise the sandhis in the following verse and write the अन्वयरचना.

१) दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥

*NOTE*
Please write the answers in a separate sheet of paper and send it to us.

शि (इं) - VII, नवें - ९७, १,०००



# एवम् आहुः महान्तः....

संस्कृतभाषा अस्माकं भाषाणां कृते गङ्गानदी इव । अहम् एतावत् तु वदामि यत् यदि संस्कृतभाषा शुष्का भवेत् तर्हि अन्याः सर्वाः भाषाः जीवरहिताः भवेयुः इति । अतः सर्वे संस्कृतं पठेयुः । संस्कृताध्ययनतः मम जीवनरीतिः एव परिवृत्ता अस्ति ।

- महात्मा गान्धी

अद्यावधि मानवमानसेन विचारप्रकाशनार्थम् अन्विष्टेषु साधनेषु संस्कृतम् एव श्रेष्ठं साधनम् । तत् विशुद्धं, परिपूर्णम्, अपूर्वं, योग्यं च अस्ति । सरलसंस्कृतम् एव भारतस्य राष्ट्रभाषा भवेत् ।

- श्री अरविन्दः

भारतस्य अतिश्रेष्ठः शेवधिः कः इति, परम्परागता अद्वितीया पैतृकी सम्पत्तिः का इति वा यदि कोऽपि पृच्छेत्, तर्हि अहं वदामि संस्कृतभाषा तन्निष्ठं साहित्यं चेति । यावत् सा भाषा स्थास्यति, यावच्च तस्याः प्रभावः जनजीवने भविष्यति, तावत् भारतस्य आधारभूता एकता अपि स्थास्यति ।

- पं॰ जवाहरलालनेहरू

परिपूर्णतादृष्ट्या सौन्दर्यदृष्ट्या च यदा चिन्तयामः तदा भासते यत् ग्रीक्ल्याटिन्प्रभृतयः भाषाः अपि संस्कृतस्य पुरतः पेलवाः भवन्ति इति । विज्ञानक्षेत्रे गणितं यथा, तथा सर्वासु भाषासु संस्कृतव्याकरणम् ओतप्रोततया व्याप्तम् अस्ति ।

- सर् विलियम् जोन्स्

न जाने विद्यते किं तत् माधुर्यमिह संस्कृते ।
सर्वदैव समुन्मत्ता येन वैदेशिका वयम् ।।

- विल्सन्

I don't know, what sweetness is hidden in Samskrit, by which we foreigners are so enraptured.

